श्रीगणेशशारदागुरुभ्योनमः निर्विघ्नमस्तु श्रीगुरुदक्षिणामूर्तयेनमः श्रीशारदाजयति सत्यंम् श्रीशुभमस्तु ॥ उपजीव्योपजीवकभावेति ॥ अतिदेश
वाक्यजन्यशाब्दबोधस्यैवोपमानत्वमिति प्राचीनमते उपमानप्रमाणस्यातिदेश । वाक्यरूपशब्दप्रमाणजन्यत्वेन शब्दस्यार्थज्ञानजन्यत्वमिति मतेवि
शिष्टवाक्यार्थज्ञानरूपप्रयोगमूलभूतज्ञानजन्यत्वेन शब्दस्यैव तन्मते प्रमाणत्वेन स्वरूपत उपजीव्योपजीवकभावः शक्तिज्ञानात्मकोपमितिजन्यत्वेन
शाब्दबोधस्य फलयोरप्युपजीव्योपजीवकभावः ॥ सादृश्यज्ञानमेवोपमानमिति नवीनमते फलनिश्चययोरेव उपजीव्योपजीवकभावयोः स्वाश्रयकरण
त्मकपरंपरासंबंधेन प्रमाणनिश्चययोरेव उपजीव्योपजीवकभावयोः संगतित्वं बोध्यमिति केचिदाहुः ॥ तंन्नश्रद्धेयं ॥ सादृश्यज्ञानात्मकोपमानजन्यत्वस्य सा
क्षात्संबंधेनैवोपमितौ सत्वादुपमितेरपि पदज्ञानरूपत्वेन शब्दप्रमाणरूपत्वात् स्वरूपत एव संगतित्वसंभवात् । यद्यपि शाब्दबोधस्य उपमानत्वनये उपमा
नत्वेपि शाब्दोपजीवकत्वमस्तीति शब्दनिरूपणानंतरमेवोपमानं कुतो न निरूपितमिति वक्तुं शक्यते तथापि संगतेरनंतराभिधानाव्याप्यत्वेन न दोषः । प्रपंचि
तमनुमानखंड एव । एवकारार्थकस्येति । एवकारार्थो अर्थो यस्येति मध्यमपदसमासलोपेन एवकारार्थबोधकस्येत्यर्थः हस्तचेष्टादेरिति । तथा च मौनिस्थके

1
दि॰रा॰शा॰ विजातीयहस्तचेष्टास्थलेतुशब्दोच्चारणाभावेन ज्ञायमानपदाभावाच्छाब्दबोधोनस्यात्।पदज्ञानस्यकारणत्वमितिनवीनमतेतुलिप्याहस्तचेष्टयावासंकेति शब्द॰
१ तपदज्ञानाद्भवति शाब्दबोधइतिभावः।पदार्थज्ञानमात्रस्येति। यद्यपिप्रत्यक्षादिनाघटादिज्ञानेपदज्ञानजन्यत्वाभावेनपदज्ञानव्यापारत्वमसंभवदुक्तिकमे
व-तथापितथापिघटपदबोध्योयंघटइत्यस्याद्युपनयसंनिकर्षविधयापदज्ञानजन्यत्वेनव्यापारत्वसंभवोबोध्यः।अयंघटइतिशाब्दबोधस्यतुपदज्ञान
जन्यत्वंसुलभमेवेतिभावः।घटकत्वमिति।पदजन्यपदार्थोपस्थितिघटकंपदजन्यत्वंवृत्तिरूपसंबंधसहकारेणमूलार्थोबोध्यइतिभावः।ननुवृत्तिरूपसंबंध
ज्ञानस्यसहकारित्वंकुतइतिचेदित्थं।एकसंबंधिज्ञानमपरसंबंधिस्मारकं।पदज्ञानार्थोपस्थितिरीत्यापदपदार्थयोर्वृत्तिरूपसंबंधज्ञानेसत्येवपदज्ञा
नात्पदार्थस्मरणंजायतेनतुपदज्ञानमात्रेहस्तिहास्तिपकयोः संबंधाज्ञानेहास्तिपकदर्शनेपिहस्तिनोऽस्मरणादितिसंबंधज्ञानस्यसंबंधिज्ञा
नसहकारित्वमवश्यंत्वमिति इत्थंचपदजन्येत्यादिमूलेपदज्ञानजन्येत्यादिरेवार्थइतिबोध्यम्।एकसंबंधिज्ञानस्यैवापरसंबंधिस्मारक
त्वादिति।तीरोपस्थितेरभावादितिगंगापदशक्यप्रवाहसंबंधस्यतीरेग्रहीतत्वादेवगंगापदेनप्रवाहोपस्थितौतीरोपस्थितिसंभवेन

तीरेगंगापदशक्तेरकल्पनादितिभावः अन्यतरसंबंधइत्यत्रषष्ठीतत्पुरुषसमासभ्रमं निराकुरुते अन्यतरात्मकइति - पदजन्यपदार्थोपस्थितावेवेति -
शक्तिज्ञानाभावेपि शक्यसंबंधरूपलक्षणाग्रहस्याथसंभवेन पदपदार्थयोः संबंधज्ञानाभावात्पदज्ञानेन शाब्दबोधप्रयोजकीभूतस्मरणोत्पादनासंभवात
थाचैतदभिप्रायेणैवकारिकायां शक्तिधियः पदज्ञानसहकारित्वमुक्तमिति भावः अतिप्रसंगइति - घटपदबोध्यत्वप्रकारकेच्छायाः घटपदशक्तित्वेतस्याः ई
श्वरमात्रवृत्तित्वेनघटेघटपदशक्तिर्नस्यादितिविशेष्यतासंबंधेनैवतादृशेच्छारूपत्वात्तथात्वेश्वरस्यानेकेच्छावत्त्वेनगौरवाद्घटपदाद्घटोबोद्धव्यः पटपदात्प
टोबोद्धव्यइतिसमूहालंबनरूपैकेच्छायाएवतत्त्वांगीकरणीयतयातस्याश्चविशेष्यतासंबंधेनपटेपिसत्त्वेनतत्रघटपदशक्यत्वप्रसंगइति भावः तीरेपि
सत्त्वादिति - भगवदिच्छायास्तन्मात्रविषयकत्वेनगंगापदाल्लक्षणयातीरबोधस्यापिजायमानत्वेनतद्विषयकत्वस्यापीश्वरेच्छायामावश्यकत्वादितिभा
वः नातिप्रसंगानवालक्षणोच्छेदप्रसंगइति - तत्पदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासंबंधेनईश्वरेच्छावत्त्वस्यतत्पदशक्यत्वा
भ्युपगमेनईश्वरेच्छानिरूपितयत्पदजन्यविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतायाः घटादावसत्त्वेनपटादेः तादृशविशेष्यतासंबंधेनईश्वरेच्छा
वत्त्वमितिनपटादेः घटपदशक्यत्वमितिभावः अन्यथातदभाववतितत्प्रकारकत्वेनईश्वरेच्छायाः विसंवादित्वापत्तेः - तीरादौगंगापदवाच्यत्वव्यवहाराभा

दे॰रा॰श॰ तेनेश्वरेच्छायां गंगापदजन्यबोधविषयस्तीरमित्याकारकता नस्वीक्रियते अपितु विषयतायां गंगापदजन्यबोधो भवतु तीरविषयतावद्भवत्वित्येवं रीत्य ख॰ ड
त्यातिशक्तिलक्षणयं देशेन विषयतात्वेनैव गंगापदजन्यबोधविषयतायास्तीरभगवदिच्छयावगाहनात्तीरादौ गंगापदजन्यबोधविषयतात्वावच्छि
२ न्नप्रकारतानिरूपितविशेष्यतासंबंधेनेश्वरेच्छावत्त्वमिति तीरादौ गंगापदशक्त्यभावात्तीरादिविषयकशाब्दबोधनिर्वाहाय लक्षणांगीकारो ह्यावश्य
कत्वाभावः एतन्न विशेषणे यद्विशेषणं तस्यैव प्रकारतावच्छेदकत्वेन गंगापदजन्यबोधतीरविषयस्तीरं भवत्वितीश्वरेच्छानिरूपिततीरनिष्ठविशेष्य
तायां गंगापदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितत्वं नाभ्युपयंते किंतु शुद्धविषयतात्वावच्छिन्नप्रकारतानिरूपितत्वमेवेति ग्रंथकाराश
यसंगच्छत एवेतिकश्चो निदाक्षेपो निरवकाशः आधुनिकसंकेतितत्तु न शक्तिरिति मूलग्रंथविरुद्धं आधुनिके नाम्नि शक्तिरस्त्येवेति मूलमित्याशंक्य आ
धुनिकनाम्नीत्यस्य नाम्नि विशेषतापरतामाह आधुनिके त्यादि मूले एकादशेऽहनि गतानामकुर्यादित्यनंतरं श्रूयत इति पूरणीयं इश्वरेच्छायास्तत्वादित्य
स्यसंकेततत्तत्पदजन्यबोधविषयत्वप्रकारतात्तदर्थविषयकभगवदिच्छायाः सत्वादित्यर्थः ननु साधुशब्दानामपि चिरसंकेतदर्शनेपि तेषां तत्तद्रूपे २
णभगवदिच्छावगाहनप्रमाणिकः अनंतप्रकारतानिरूप्यतायाः किं कल्पनं गौरवाच्चेत्यभिप्रायेणाह एकादशाहः कार्द्धीनेति तथाच एकादशाहः का

कीनपितृत्वारितशब्दजंन्यबोधविषयः पित्रादिसंकेतितविशेष्योभवत्वित्याकारिकैवभगवदिच्छाकल्पनामितिभावः नन्वेवमध्याधुनिकसंकेतितत्वा
दिमूलमसंगतमेवएकादशेहनिपित्रादिसंकेतनाम्निशक्तिः स्वीकारादतोमात्रपदंपूरयति आधुनिकमात्रेतिमात्रपदेनेश्वरव्यावृत्तिः पूर्वोक्तनामसु
सामान्यरूपेणेश्वरसंकेतसत्वात्तेषुशक्तिसत्वेपिनक्षतिरितिभावः। अस्वरसमिति। वक्ष्यमाणमित्यर्थः अस्वरसंप्रकटयति। तथासतीतिशक्तिभ्रमे
लक्षणाग्रहंत्वविनेत्यादिः तेनशक्तिभ्रमादिनाशाब्दबोधसंभवेपिनक्षतिः इदमुपलक्षणंईश्वरानंगीकर्तॄणांप्राभाकरादीनामीश्वरेच्छारूपशक्तिग्र
हासंभवेनशाब्दबोधानुपपत्तिरपिद्रष्टव्यंम् मूलेधातुप्रकृतीति धातुः प्रातिपदिकेत्यर्थः प्रत्ययः विभक्तितद्धिताख्यातकृतयः आदिनासमासस्यापि
व्याकरणाच्छक्तिग्रहः। तत्रापिभूसत्तायामितिधातोः शक्तिग्राहकत्वं एवंपाचकादिप्रातिपदिकस्यापिव्याकरणाच्छक्तिग्रहः पचधातोः पाकार्थक
स्यतदुत्तरकृत्प्रत्ययस्यकर्तृत्वार्थकस्यतत्रप्रतिपादनात्तत्रगवादिप्रधानप्रातिपदिकानांकोशादेवशक्तिग्रहइतिमंतव्यंम्। वस्तुतः धातुः प्रकृतीत्य
स्यधातुरूपप्रकृतिरित्यर्थः धातोःप्रकृतित्वप्रदर्शनंचप्रत्ययतोवैलक्षण्यद्योतनायैवातएवआदिपदेनसमासादिवृत्तीनांसंग्रहोपिसंगच्छते
तेषामेवप्रातिपदिकत्वादितिसारं। वर्त्तमानेलडित्यादिकंतुप्रत्ययेशक्तिग्राहकमितिविवेकः कृतित्वजातेरितिकिंचिद्विशेषितस्यएकस्य

दि॰शा॰श॰ कृतित्वस्य शक्यतावच्छेदकत्वे लाघवं - कृतित्वविशिष्टानामनंतकृतीनां तथात्वे गौरवं - जातेरेव स्वरूपतो भानाभ्युपगमेन स्वरूपकृतेः शक्यतावच्छे ख॰ ३
दकत्वासंभवादिति भावः नवीनैर्वैयाकरणैस्तु आश्रयमात्र एव कर्तृकर्माख्यातयोः शक्तिः स्वीक्रियते कृत्यादि व्यापारफलयोर्धातुनैव लाभादाश्र
३ रि॰त्यादि यत्वं चाखंडोपाधिरिति तन्मते गौरवं परंतु --लः कर्तुंमूलभूतसूत्रविरोध एव नच कर्तरीत्यस्याश्रयत्वेवार्थ इति वाच्यं मृत थासति स्वतंत्रः कर्त्तेति सूत्र
कृत्परिभाषायाचैयर्थ्यापत्तेः स्वशास्त्रे यत्र कर्तृपदप्रयोगः यत्रायमर्थ इति ज्ञापयितुमेव परिभाषाकरणात् स्वातंत्र्यं च कारकांतरव्यापारानधीनव्यापारवत्त्वं
स्यातिगुरुभूतमेव इत्थं च श्लो। फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः इति कारिकापि सूत्रविरुद्धैव किंच कर्तृपदस्य लक्षणेनाश्रयार्थकत्वं वाच्यं मृ-
कृतिमत एव तस्य मुख्यार्थत्वात् तथा च वरं तदपेक्षया कृतावेव लक्षणाकल्पनं आश्रयत्वस्याखंडोपाधित्वे मानाभावात् धारत्वारूपस्य तस्य स्वरू
पसंबंधरूपत्वेनाननुगतत्वादिति मंतव्यं अनभिहितेति अनभिहिताधिकारीयेणेति सूत्रानंतरपठितेन कर्तृकर्मणोस्तृतीयेति सूत्रेणेत्यर्थः
किंतु अयुक्तकमित्याशंक्येति चैत्रस्तंडुलं पचतीत्यादौ चैत्रगतसंख्यैवाख्यातेनाभिधीयते न तु तंडुलादिगतेत्यत्र नियामकाभावे चैत्रेण पच्यते ३
तंडुल इत्यादावपि चैत्रगतसंख्याभिधानसंभवेन तृतीया न स्यादित्याशंकायां पर्यवसितोर्थः अथमांतपदोपस्थाप्यपदस्यानुमूल एवाख्येयत्र

तंडुलं पचतीति प्रयोगे द्वितीयायाः कर्मत्वेनैव तात्पर्यं तत्र तंडुले संख्यान्वयवारणप्रयोजनं दर्शयिष्यतीति तदुपेक्षितं न च कर्मत्वाद्यविवक्षायां तृतीयैव
न साधुः कर्मणि द्वितीयेति तद्विधानादिति वाच्यम् असाधुत्वेपि प्रयोजनप्रदर्शनबाधकाभावात् साधुप्रयोग एव दर्शनीयमिति नियमाभावादपभ्रंशाद
पि शब्दबोधोत्पत्त्या तत्र शाब्दबोधोपपादनासंभवादिति ध्येयम्। नन्वित्यादि। कर्मत्वाद्यनवरुद्धत्वं यदि द्वितीयादिकारकविभक्त्यर्थाविशेष
श्री णत्वं तदा चैत्र इवेत्यादौ चैत्रस्येवादिसादृश्य एव विशेषणत्वापि कारकविभक्त्यर्थकर्मत्वादावविशेषणत्वेनाख्यातार्थसंख्याया मैत्र इव चैत्रे
अन्वयः स्यादतः कर्मत्वाद्यनवरुद्धत्वं निर्विक्तीति भावः। एवं कर्मत्वाद्यनवरुद्धत्वं यदि कर्मत्वाद्यनन्वितत्वं तदा पक्ष्यमतं भुज्यत इत्यादौ पाककर्
ते मत्वे नास्ति अनेन आख्यातार्थसंख्याया अन्वयो न स्यादतोपि तं निर्वचनमावश्यकमिति भावः इत्थं चेतरान्वितत्वेन तात्पर्याविषयमित्यस्य
परित्यागो नुचित इति ध्येयम्। नन्वितरार्थकमित्यादि पदं व्यर्थं। विशेषणत्वेन तात्पर्याविषयतार्थककर्मत्वानवरुद्धत्वपरोपादानेनैव सामं
जस्यादित्यस्वरसा। कर्मत्वाद्यनवरुद्धत्वमिति समुदायस्यैव विशेषणत्वेन तात्पर्याविषयत्वपरतामाह। वस्तुतस्त्विति नन्वितराविशेषणत्व
मिति परित्यज्येतरविशेषणत्वेन तात्पर्याविषयत्वपर्यंतानुधावनमफलमित्याशंकां निरस्यंस्तत्प्रयोजनं दर्शयन्नाह अविशेषणत्वमिति

दि॰रा॰रा॰ एवकारार्थेऽन्यस्मिन्निति। एवकारार्थस्त्रिविधः अन्ययोगव्यवच्छेदः अत्यंतायोगव्यवच्छेदश्चेति। अत्र विशेष्यसंगतएवकारस्यान्ययोगव्यवच्छे
दोर्थः यथा चैत्र एव पचतीत्यादौ चैत्रान्यस्मिन्पाककर्तृत्वायोगो व्यवच्छिद्यते तत्रान्यस्मिन्योगव्यवच्छेदे च पृथगेव एवकारस्य शक्तिः। अन्यरूपार्थ
४३। स्यैकदेशे विशेष्यविधया भासते संबंधरूपयोग एव आख्यातार्थः कृतेः प्रतियोगित्वेनान्वयः तादृशयोगस्याभावरूपव्यवच्छेदे प्रतियोगिविधया
न्वयः अभावश्चान्यस्मिन्प्रकारविधया भासते। तथा च चैत्रः पाकानुकूलकृतिमान् चैत्रः पाकानुकूलकृतिसंबंधाभाववानित्याकारकए
वशाब्दबोधो भवति। उक्तस्थलएव संबंधस्यैकत्वेनान्वयित्वेन संबंधाभावाप्रसिध्या शक्तिग्रहएव न संभवतीत्यपि प्रत्युक्तम्। विशेषणसंगतैव
कारस्यायोगव्यवच्छेदोर्थः यथा शंखः पांडुर एवेत्यादौ शंखे पांडुरायोगो व्यवच्छिद्यते। क्रियासंगतैवकारस्यात्यंतायोगव्यवच्छेदोर्थः यथा
नीलं सरोजं भवत्येवेत्यादौ सरोजनीलभवनस्य नीलत्वस्यात्यंतायोगो व्यवच्छिद्यते क्वचित्सरोजे नीलत्वासंबंधस्यापि सत्वादिति ध्येयम्। यद्य
प्ययोग अत्यंतत्वं सरोजत्वव्यापकत्वमेव वाच्यम् तदन्यस्य दुर्वचत्वात्तथा च सरोजनिष्ठभेदप्रतियोगितानवच्छेदकनीलत्वसंबंधाभावस्याप्र ४८
सिध्या तद्व्यवच्छेदो दुर्घटः तथाप्ययोगत्वस्य सरोजनिष्ठभेदप्रतियोगितानवच्छेदकत्वरूपस्य व्यवच्छेद एवात्यंतायोगव्यवच्छेदपदार्थ इति नो

कानुपपत्तिः ननु एवकारादतिरिक्तविशेषणत्वेन तात्पर्याविषयत्वमेव कर्मत्वाद्यनवरुद्धत्वं वाच्यम् चैत्रस्य एवार्थान्यस्मिन्विशेषणत्वेपि न तत्र संख्यान्व
यानुपपत्तिरत एवेतरपदमनर्थकमित्याशंकायामाह चैत्र इत्यादि । अत्र द्वितीयार्थः कर्मत्वमेव चैत्रस्य विशेषणत्वेन तात्पर्यविषयत्वात् चैत्रे संख्यान्वयो न
स्यादिति भावः विशेषणत्वमात्रेणेति मुख्यविशेषणत्वेन तात्पर्याविषयत्वे सतीति विशेषणत्वेन तात्पर्यविषयत्वं तदसंभवः संख्यान्वये नियामक इति भा
वः ननु नानार्थकसैंधवादिपदाल्लक्षणस्यैव बोध इति नियमात् तादृशस्थले एकतात्पर्यज्ञानहेतुत्वमावश्यकं न तु सर्वत्र । एकपदार्थस्थले तद्धेतुत्वकल्पने बी
जाभावादेवं च चैत्र इवेत्यादौ चैत्रादेरिवार्थीयदा न विशेषणत्वतात्पर्यं तदा चैत्रादौ संख्यान्वयः स्यादित्याशंकते यदि चेत्यादिना । नानार्थातिरिक्तस्थले
इति इदमुपलक्षणं तात्पर्यास्त्वेपि विकल्पात्मकतात्पर्यज्ञानसंभवेन शाब्दबोधमात्रे तात्पर्यज्ञानस्य हेतुत्वेपि चैत्रे संख्यान्वयापत्तिर्द्रष्ट्या । तदेत्यादि ।
विशेषणत्वमात्रप्रयोजकं यच्चैत्र इवेत्यादौ प्रथमान्तं चैत्रपदं तदनुपस्थाप्यत्वमेवाविशेषणत्वपदेनात्र विवक्षितं । तथा च चैत्र इवेत्यत्र प्रथमान्तचैत्रपदस्य इ
वार्थविशेषणत्वमात्रप्रयोजकतया तदनुपस्थाप्यत्वेन न तत्र संख्यान्वयः चैत्र एव पचतीत्यादौ चैत्रसंख्यान्वयोपपत्तये मात्रपदं मुख्यविशेषणत्वाप्रयोज
कत्वे सति विशेषणत्वप्रयोजकत्वं विशेषणत्वमात्रप्रयोजकत्वं । यद्यपि चैत्र इवेत्यादावपि चैत्रपदजन्यपदार्थस्मरणे चैत्रो मुख्यविशेषणतयैव भासत

दि॰रा॰श॰ इतितस्यापिविशेषणत्वमात्रप्रयोजकत्वंतथापिशाब्दबोधनिरूपितविशेषणत्वमात्रप्रयोजकत्वमिहविवक्षितमितिनकोऽपिदोषः नन्वात्रप्रथमांते
तिप्रथमेतिवाच्यम् चैत्रःचैत्रंपश्यतीत्यत्रद्वितीयांतचैत्रपदस्यविशेषणत्वमात्रप्रयोजकतयातदुपस्थाप्यत्वस्यचैत्रसत्त्वेनतत्रसंख्यान्वयोपपत्तयेतत
५ दुपादानावश्यकत्वात् नचैवमपिचैत्रःपचतिचैत्रइवमैत्रःसुंदरइतिवाक्यद्वयजन्यसमूहालंबनशाब्दबोधःतत्रचैत्रसंख्यान्वयोनस्यात् तत्रतथाविधप्र
थमांतपदोपस्थाप्यत्वस्यैवतदानींसत्त्वादितिवाच्यम् यत्प्रथमांतपदाख्यातपदाभ्यामन्वयप्रयोज्यपरस्परनिरूप्यनिरूपकभावापन्नविषयताशालिशाब्दबोधे
तज्जन्यतद्विशेषणतामात्रप्रयोजकप्रथमांतपदोपस्थाप्यत्वाभावस्याख्यातार्थसंख्यान्वयप्रयोजकत्वोपगमादित्युक्तस्थलेपचतीत्याख्यातपदचैत्रपदाभ्यांता न
दृशशाब्दबोधाजन्यत्वइतिनसंख्यान्वयानुपपत्तिरतस्तत्पदमपिग्रंथस्थंसाधुसंगच्छतइतिध्येयम् ननुतंडुलंपचतीत्यत्रतंडुलस्यकर्मत्वांशेविशेषणत्वविवक्षा
भावेद्वितीयैवनोपपद्यतेकर्मत्वांशेप्रकृत्यर्थस्यविशेषणत्वेनविवक्षायामेवकर्मणिद्वितीयेत्यनेनतदुत्तरंद्वितीयाविधानादित्यंचनविशेषणत्वेतात्पर्यमितिम्न
त्वमसंगतमतआह नविशेषणत्वमित्यादि विशेषणत्वमुख्यविशेष्यत्वाभ्यामित्यादि तंडुलकर्मकपाकानुकूलव्यापारवांस्तंडुलइतिशाब्दबोधेतात्पर्यंतत्र ५
तंडुलेपिसंख्यान्वयवारणायप्रथमांतेत्यादिभावः ननुतंडुलंपचतीत्यत्रयदोक्तबोधेतात्पर्यंतदातंडुलेप्याख्यातार्थसंख्यान्वयइष्टापत्तिरेवेतियदिब्रूयात्तदा
इति

सुप्रथमांतेत्यादेः प्रयोजनं दर्शयति। इदमिति। तथा च चैत्र इवेत्यादौ चैत्रसंख्यान्वयवारणाय कर्मत्वादीति चैत्रेण सुप्यत इत्यत्र स्वापे तदन्वयवारणाय प्रथमां
तेत्यादीति प्रयोजनमपि साधुप्रयोग एव संभवादिति भावः। द्वितीयद्वकस्येति। तंडुलं पचतीत्यत्र आख्यातार्थस्य तंडुले विशेषणत्वेन्वयतात्पर्याभावे नान्वयि
न्यद्वसंख्यान्वय इति नियमः। तत्र संख्यान्वयोप्यावश्यकः एवं संख्याभिहितत्वे प्रथमाप्यावश्यकी। दोषानुभयप्राह्यपरं कारकमिति नियमाद्द्वितीयापेक्षया
अभिहिते कर्तुः प्रथमाया बलवत्वात् तथा च चैत्रश्चैत्रं पश्यतीतिवत् तंडुलं पचतीत्यादिप्रयोगः साधुः। वस्तुतस्तु कर्मकर्तानुकमेवदिति कर्माभिन्नकर्मकर्मत्वादि
दृशा कर्तुः लडात्मनेपदयोरावश्यकत्वेन पच्यते तंडुलः स्वयमेवेत्येव प्रयोगः साधुः। साधुप्रयोग एव प्रयोजनं दर्शनीयमित्यभिप्रायेण स्तोकं पचतीत्यादौ क्रि
याविशेषणे संख्यान्वयवारणं प्रथमांतेत्यादेः प्रयोजनं वक्तुमित्यर्थः। भावनात्वं कर्तृत्वमेतेन त्वत्वान्यतरत्वं॥ अपादानं संप्रदानं ततोधिकरणं कर्मकर्मेति कारण
करणं क्रमेणोमत इत्यवधेयं। द्वितीयां तक्रियाविशेषणानां कर्मत्वं नपुंसकलिंगता चेति वार्तिकेन कर्मत्वानुशासनात् क्रियाविशेषणानां द्वितीयत्वादिति भावः। विभा
वनीयमिति। धात्वर्थातिरिक्तविशेषणत्वमात्रेण तात्पर्याविषयत्वमेव कर्मत्वाद्यनवरुद्धत्वमेतत्कल्पेपि विवरणीयमिति भावः। संख्यामविषयीकृत्येति। दा
राः संतीत्यादौ नित्यबहुवचनात् दाराशब्दाधि आख्यातार्थबहुत्वसंख्याया बाधितत्वादिति भावः। कर्तरीत्यादि। कर्तृपदं भावप्रधाननिर्देशात् कर्तृत्वमेव।

दे०रा०श० र्थः कर्तृत्वंच क्रियानुकूलकृतिमत्त्वं मुख्यं गौणं च क्रियानुकूलव्यापारवत्त्वं आश्रयत्वं वा नश्यतीत्यादौ प्रतियोगित्वमिति बोध्यम्। एवंचानभिहिते इत्यधिका
रीयकर्तृकरणयोस्तृतीयादावपि कर्तृत्वकरणत्वयोरित्यर्थः। यत्रगतं कर्तृत्वं करणत्वं चाभिहितं तत्र प्रथमैव न द्वितीया। द्वितीयेति तद्विधायकसूत्राणाम
नभिहिताधिकारत्वात्प्रातिपदिकार्थस्य मुख्यविशेष्यत्वविवक्षायां संबोधनेऽपि, लकारत्वादभिहितकर्तृत्वाद्याश्रये च प्रथमाया एव विधानादिति नाख्यातेन
तद्गतसंख्यानभिधानस्यैव तद्बोधकपदोत्तरतृतीयाप्रयोजकत्वे दाराः संतीत्यादौ दारेषु बहुत्वस्य बाधितत्वेनाबोधनाद्दारैरिति तृतीयापत्तिरित्यपि
प्रत्युक्तं। इति विभावनीयं। जन्यत्वादिति। तज्जन्यत्वे सति तज्जन्यजनकस्यैव व्यापारपदार्थत्वादिति भावः तदभावेऽपीति। रथस्याचेतनत्वेन यत्नाभावे
पीत्यर्थः तदाश्रयत्वमेव रथो गच्छतीत्यादौ रथे प्रतीयते तत्तु तादृशक्रियानुकूलाश्वादिसंयुक्तचक्रादिसंयोगवत्त्वमिति भावः निरूढलक्षणेति। अनादिता
त्पर्यविषयलक्षणेत्यर्थः। आदिनेति। तथाच जानातीत्यत्र शाब्दत्वावच्छिन्नं प्रतिपदजन्यतद्विषयोपस्थितत्वेन हेतुत्वात्प्रकारके विशेष्यमर्यादया शाब्द
बोधपदादनुपस्थापितस्य भानासंभवात्संसर्गभानार्थं न शाब्दबोधे पदद्वयसमभिव्याहाररूपविशेषाकांक्षा नियम्यमेवेति न तत्रापि पदजन्यत्वनि
नन्यत्व-- शब्दासंसर्गे शक्तिकल्पनमिति न्यायविरोधादपि संसर्गे न शक्तिः कल्पयते संसर्गस्याकांक्षाभाष्यत्वादिति भावः एवपदस्येति। देहलीदीपेति दे
हलीस्थायीदीपः सदनान्तरस्थवद्बहिःस्थवस्तुप्रकाशकत्वेन संबध्नातीति तथोक्तपद्मं तदिति भावः तत्रहीत्यादि मूलग्रंथेऽन्वयप्रकारमाह तत्रहीति। एवमुभयत्र -

६

र्भवतीत्यत्राहीत्यर्थः शक्तिनिर्णयो वाक्यशेषापेक्षया संदेहः संभवतीत्यभिप्रायेण तादृशेत्यादि सत्यंतं पूरयति। तादृशेति। शक्तिवाचकपदाभावादित्य
र्थः कोशात्तु विनायको विघ्नराजेत्यादौ ससंख्यावाचकत्वार्थकतया वाचकतायाश्च शक्तिनिरूपकतारूपतया तद्वाचकपदमस्त्येवेति भावः। अमरानिर्ज
रादेवा इत्यादाविवकार शब्दार्थकता इत्यध्याहारात्स्वक्रियाहकमिति बोध्यं। प्रसिद्धार्थकपदस्येति प्रसिद्धार्थकसमभिव्याहारोऽथानुमानविधया शक्तिग्रा
हकस्तथा युक्तवाक्यादिना इहाम्रवृक्षे मधुरस्वरकर्तापिकपदवाच्य इति बोधः पिकपदस्य पूर्वं शक्तिग्रहाभावात्कोकिलदर्शनानंतरं कोकिलः पिक
पदवाच्यः सहकारतरौ मधुरालापकर्तृत्वादित्यनुमानादेव शक्तिग्रह इति ध्येयम् प्रसंगादिति। प्रसंगसंगतेरित्यर्थः नागृहीतेति। अगृहीतविशेषणा बुद्धि
र्विशिष्टेनोपजायते विशिष्टविषयिणी न भवतीत्यर्थः ससंख्यादिविषयकत्वात्। लाघवादिति। घटत्वविशिष्टनानाघटेषु शक्तिकल्पनामपेक्ष्य शुद्धघट
त्वे शक्तिकल्पने लाघवादित्यर्थः विशेष्यमित्यादि। अभिधा शक्तिः विशेष्यं नगच्छेत् न याति अपि। कुत इत्याकांक्षायामाह क्षीणशक्तिर्विशेषणे इत्यनंतरं
अनुगतशक्तीति पूरणीयं। यतः विशेषणं प्राप्य पदशक्तिः क्षीणसामर्थ्या भवति। अतः विशेषणं नापि दाग च्छेत्। वक्ष्यमाणरीत्या विशेषणशक्त्या त्पदा
देव विशिष्टविषयकशाब्दबोधोपपत्तौ विशिष्यांशशक्तिकल्पने बीजाभावादिति पर्यवसितार्थः व्यक्तौ शक्तिस्वीकारे व्यभिचारादानंत्याच्चेति दूषणद्व

दि० रा० यंमूलेऽभिहितंतयोः संगमनायविकल्प्य दूषयति। यस्यामिति। व्यभिचारइति। तद्विषयक शाब्दबोधंप्रतिन धर्मिक शक्तिज्ञानमेव हेतुर्वाच्यः। अन्यथाघ ख० उ०
८ टादिपदात्पटादिशाब्दबोधापत्तिः तथाचोक्त घटव्यक्तावेवपद शक्तिस्वीकारे घटांतरविषयक शाब्दबोधान्यथानुपपत्यातादृशकार्यकारणभावे व्यभिचार
इतिभावः। द्वितीयकल्पेदूषणमाह अनंत्यमिति। सकलघटव्यक्तिषुशक्तिस्वीकारे व्यक्तीनामानंत्येनशक्तीनामानंत्यमितिद्वितीयदूषणसंगतिरितिभावः
मूले व्यक्तौशक्त्यभावेशाब्दबोधेशक्तिभानासंभवइत्याशंकायां व्यक्तिविनाजातिभानासंभवाद्व्यक्तिभानमित्युक्तं मू। तंत्रसंगच्छते। गोत्वमुख्यविशेष्यक
स्मरणंतत्रव्यक्तिंविनापिजातिभानादेवंव्यक्तिभासकसामग्रीमंतरेणशाब्दव्यक्तिभानासंभवाच्चेत्यतस्तदर्थंव्याचष्टे जानातीति। तथाचजातिविशेष्यकश
क्तिज्ञानशाब्दबोधाज्जातिभासकंतदेव व्यक्तिभासकमपीतिभावः। पदजंन्येति तद्विषयकशाब्दबोधंप्रतितद्विषयकपदजंन्योपस्थितेर्हेतुतयाजातिपदयोरे
वसंबंधग्रहेपदस्यैकसंबंधिज्ञानाज्जातिरूपसंबंध्यंतरस्यैवस्मरणंभवतिनतुव्यक्तेरितिपदजंन्यव्यक्तिस्मरणाभावेनव्यक्तिशाब्दबोधानिर्वाहाद्व्यक्तौशक्ति
रावश्यकीतिभावः ननुव्यक्तौपदजंन्यलक्षणास्वीकारेऽपिशक्त्यापदजंन्यस्मरणाभावेनकथंव्यक्तिविषयकशाब्दबोधइत्याशंकायामाहतावतैवेतिनिर्वाहा ८
दितिशक्तिलक्षणाद्वयोरपिवृत्तित्वादितिभावः। पूर्वोक्तेति। शक्त्यानंत्यप्रसंगरूपमित्यर्थः। अननुगमतयेत्यर्थइति। अनुगतानतिप्रसक्तधर्मावच्छिन्नतयेत्यर्थः

ऽवच्छेदकत्वासंभवइति।व्यक्तिस्तुतथाविधैकधर्मसत्वेतदवच्छिन्नविषयकशाब्दप्रतीतिस्तदवच्छिन्नविशेष्यकशक्तिज्ञानत्वेनहेतुतासंभवाच्छक्तिज्ञाननिष्ठका
रणतायांविषयविधयाशक्तेरेवावच्छेदकत्वसंभवइतिनतादृशधर्माभावेत्यर्थः नचतद्विषयकशाब्दबोधंप्रतितद्विषयकशक्तिज्ञानंहेतुरस्त्वितिवाच्यम्।तथासतिश
क्तिज्ञानविषयकस्यपूर्वाननुगतगवादेश्शाब्दबोधासत्वापत्तेरितिभावः।यक्तीनामननुगमाद्व्यक्तेस्तथाशक्तिज्ञाननिष्ठकारणतायामवच्छेदकत्वसंभव;तथोपपाद
यतितथाचेतिगोशाब्दबोधंगोत्वावच्छिन्नविषयकशाब्दबोधइत्यर्थः सर्वत्रेति।तद्विषयकशाब्दबोधसामान्येतद्विषयकपदजन्योपस्थितित्वेनहेतुत्वेमानाभावइत्य
र्थः उक्तत्वादिति।तथाचघटत्वेघटपदशक्तिज्ञानरहितस्यघटविषयकशाब्दबोधापत्तिर्नसंभवतीतिभावः नचैवमपितादृशशक्तिज्ञानवतः पठोपस्थितशाब्दा
द्यपितादृशशाब्दबोधापत्तिरितिवाच्यम्।तादृशशक्तिज्ञानसहकारेणपदजन्योपस्थितेरपितादृशशाब्दबोधहेतुत्वोपगमादितिभावः।शक्तिज्ञानंचनसाक्षाच्छा
ब्दबोधहेतुत्वेऽपिनव्यक्तौशक्तिसिद्धिः उक्तज्ञानस्यभ्रमत्वांगीकारात्।नहिभ्रमाद्वस्तुसिद्धिरितिन्यायादतआह।गौरित्यादिशाब्दबोधानुपपत्तिरिति।गो
त्वगोपदयोरेवशक्तिरूपसंबंधज्ञानाद्गोत्वस्यैवस्मरणत्वमुपपद्यते।ननुव्यक्तिरपीत्याशयान्नस्मरणपरित्यागः यदंशाइति।स्वात्मकयद्धर्मांशाश्रयइत्यर्थः
तादृशत्वज्ञापितधर्माश्रयांशाइत्येवार्थः ततएवद्वयंएकधर्मपरंतथाचस्वाश्रयगोत्वादिप्रकारकज्ञानंस्वाश्रयगोत्वादिप्रकारकशाब्दंप्रत्येवशक्यगोत्वप्रकारकशक्ति

दि॰रा॰ ज्ञानाद्व्यक्तौ गोत्वप्रकारकशाब्दबोधानुपपत्तिः। शक्तेर्गोत्वाश्रयत्वादित्यर्थः जातिप्रकारकेति तत्रैव व्यक्तौ शक्त्यैक्यं निरवच्छिन्नत्वासंभवेन लाघवसंभवादिति ख॰ड॰
८ भावः अत एवैतेरपि गोपदस्य रोमलांगूलादिविशिष्टव्यक्तावेव शक्तिरुपेयते न तु लांगूलादिमात्रमपि आनन्त्यात् स्वरूपतो भानासंभवाच्चेति ध्येयम्। विपरीतज्ञा
नेनिरोधिन इति। समानधर्मितावच्छेदककयोर्बाधविशिष्टबुध्योरेव प्रतिबध्यप्रतिबंधकभावान्निर्धर्मितावच्छेदकक विशिष्टबुधेर्बाधबुध्यप्रतिबध्यतया गोत्व
नेगोपदशक्यमिति बुद्धिदशायामप्युक्तशक्तिज्ञानाद्गोपदाद्गोत्वप्रकारकशाब्दबोधापत्तिः निर्धर्मितावच्छेदक शक्तिज्ञानस्य हेतुत्वाभ्युपगमे इति भावः अनुभवविरुद्धं चेदं।
ननु गोत्वत्वेन गोत्वानवगाहिनं गोत्वेन गोपदशक्यमिति बाधबुद्धिकाले गोपदाद्गोत्वविषयकशाब्दबोधः स्वीक्रियत इति चेन्न। न स्वीक्रियत इत्याशयात्। यद्यपि स्वरूपतो गो
त्वप्रकारकस्येयं गौरित्याकारकबोधस्य नेयं गौरिति बाधबुद्धिप्रतिबध्यत्वाद्व्यक्त्यंशे स्वरूपतो गोत्वप्रकारकमपि गोपदमिदं गोत्वमिति बाधबुद्धिप्रतिबध्यमेवेति गोत्वत्वेन
गोत्वस्य प्रकारकत्वं पर्यवस्यति तथाविधबोधे न क जातेः स्वरूपतः प्रकारत्वमभ्युपगम्यते। नान्यसंबंधेनेति नियमः अन्यथा ज्ञानं गुण इतिवज्ज्ञानं घट इत्यादिव्यवहारापत्तेः
ज्ञानं विषयितया घटत्वसत्वाच्च व्यक्त्यंशे तु गोत्वस्याधेयतासंबंधेनैव प्रकारता वाच्या। तथा च गोत्वत्वेनैव गोत्वभानमंकारीयमित्यत्रैव तात्पर्यमिदं च। विपरीतज्ञानमविरोधि ८
यस्येति व्युत्पत्त्या विपरीतज्ञानाप्रतिबध्यस्येति विपरीतज्ञानाविरोधिन इत्यस्यार्थः प्रथमज्ञानस्याप्रतिबध्यत्वे निर्धर्मितावच्छेदककत्वं हेतुत्वं शे हेतुः द्वितीयस्य तु तथात्वेऽप्र

तिबध्याप्रसिद्धेरेवहेतुरितिभावनीयम् शक्यतावच्छेदकत्वासिद्धिरिति नच प्रतीति शक्यतायां गोत्वत्वमोसेनाधिकरण्यमेव विषयः ननु तदवच्छिन्नत्वमपीतिवा
च्यम् प्रतीतीनां विशिष्टवैशिष्ट्यावगाहित्वस्य औत्सर्गिकत्वेन तत्परित्यागस्यानौचित्याद्विशिष्टवैशिष्ट्यबोधे च विशेषणतावच्छेदक विशेष्यतावच्छेदक
योस्तु धर्मिपारतंत्र्येण विशेष्ययोरवच्छिन्नत्वादिसंबंधेनभानोपगमादिति भावः नचेति नट स्थानामियमाशंका ननु प्रभाकराणां तैर्भ्रमानंगीका
रादित्यवधेयम् । ननु त्वगैर्बाधके काबोध्यो नियमएव प्रकृते चानंतव्यक्तीनां शक्यतावच्छेदककोटिप्रवेशगौरवमेव विशिष्ट्यावगाहितायां चास्त्येव वस्तुतो
विशिष्टवैशिष्ट्यबोधसंसर्गांशएव विशेषणतावच्छेदकविशेष्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वानुयोगिताकत्वयोर्बाधमुपेयते न तूक्तरीत्या प्रकार
कत्वप्रतीतिभिन्नाकारकत्वापत्तेरित्यस्वरसादाह । मास्तु वेति । गोविषयतायाइति । गोत्वत्वस्य गोघटितमूर्तिकत्वादिति भावः मूले जात्याकृतिविशिष्टव्यक्तौ
शक्तिप्रतिपादनाज्जात्याकृत्योर्द्वयोरेव शक्यतावच्छेदकत्वमित्यापतितं तन्न संगच्छते । लाघवाज्जातिमात्रस्यैव शक्यतावच्छेदकौचित्यात् न च त्रिष्वेकैव
शक्तिरिति वक्ष्यमाणतया गोत्वस्य शक्यतान्यूनवृत्तितया कथं तदवच्छेदकत्वासंभव इति वाच्यं व्यक्तिशक्तित्वविशिष्टशक्यताव्यापकशुद्धशक्तित्वावच्छिन्नत्वान
तिप्रसक्तत्वेन च विशिष्टशक्यतायामवच्छेदकत्वसंभवात् अन्यथा तयोः शक्यतावच्छेदकत्वेपि तद्दोषतादवस्थ्यादेवं त्रयाणामेकशक्तित्वेपि कस्यचिद्विशेषणतया

दि॰ रा॰ कस्यचिद्विशेष्यतया भानमपि मतद्वयेऽपि व्युत्पत्तिवैचित्र्येणैवोपपादनीयमिति भावः अवयवसंस्थानमवयवसंयोगः सामानाधिकरण्येति । शक्येगविसा श॰ ख॰ ड॰

९ मानाधिकरण्यसंबंधेनैवावयवसंयोगसत्त्वादिति भावः इदमुपलक्षणं । शुद्धं गोत्वजातेरवयवसंयोगापेक्षया शरीरलाघवं । नानासंयोगव्यक्तीनाम

वच्छेदकताकल्पनमपेक्ष्य एकस्या जातेस्तत्कल्पनेऽपि लाघवमप्यनुसंधेयम् । एकैकेति नानाशक्तिनानार्थहर्यादिपदादेकैकस्यार्थस्य शाब्दबोधादि

तिभावः एकवचनमितीति । एकवचनार्थैकत्वस्य पदार्थत्वं पदशक्तिरन्वय एव तात्पर्यादिति भावः । जातिविशिष्टव्यक्तावेवेत्यनंतरं एकेति पूरणीयं । अन्यथा

आवृत्तावपि पृथक् शक्तिस्वीकारादेवकारासंगतिरिति ध्येयम् । नन्वेकपदार्थयोः परस्परं नान्वयबोधः अन्यपदार्थयोरन्याश्रितयोरपि पदार्थयोः पर

स्परमन्वयप्रसंगात्तथासत्याकेतरपि यत्त्वनाश्रिततया ऽन्वयानुपपत्तेः तस्मान्नानार्थयोरिव व्यवस्थापितार्थयोरिव भेदान्वयो निराकांक्षत्वस्योपगंतव्यादि

त्यत आह व्युत्पन्नेति । तथा चैकपदार्थयोः परस्परमन्वये अनाकांक्षाविरहेऽपि एवकारार्थानामिवाकृतिव्यक्त्योरप्यन्वये आकांक्षा कल्प्यते अनुभवानु

रोधादिति भावः नन्वेवमपि । सूत्र एकवचनानुपपत्तिः शक्तेरैक्याभावादित्यत आह सूत्र इति आहुरित्यस्वरसोद्भावनं तद्बीजं तु पदार्थतावच्छेदके ९

शक्यत्वे एकत्वस्य सांघातिकत्वे नैकवचनार्थान्वयानुपपत्तेरेवेति ध्येयम्। प्रसंगात्तदादिशब्दानां शक्यतावच्छेदकतामाह। तच्छब्दस्येति। वक्ता
तच्छब्दोच्चारक ज्ञानविषयतावच्छेदकं घटत्वादि तदवच्छिन्ने तदुच्चरिततत्पदस्य शक्तिरित्यर्थः यद्यपि लाघवाद्बुद्धिस्थ इत्येव वक्तुमुचितं।
तथापि सोऽस्तीत्यादौ अनुच्चरितसिद्धस्य घटेन घटबोधस्योपपत्तये गौरवमप्यंगीकृतमिति ध्येयम् शक्तिभेदापत्तिरिति शक्तिभेदे तदादीनामपि ना
नार्थत्वापत्तिरिति भावः सचेष्टापत्तिः तथा सति सकृदुच्चरित इति ॰ अन्यथा वित्यादौ एकदा घटपटयोर्बोधानुपपत्तेः नानार्थप्रकरणे
तदादीनां कोशेऽनुक्तेश्चेति भावः तद्भानापत्तेरिति। पश्वादिपदजन्य शाब्दबोधे लोमत्वांगूलत्वादेस्तथाविधनस्य भानदर्शनादिति भावः प्रकृतेच
सोऽस्तीत्यादौ घटोऽस्तीत्येव बोधोऽनुभवसिद्धः। ननु बुद्धिविषयतावच्छेदकावच्छिन्नोऽस्तीत्याकारक इति नेदृशापत्तिरिति मंतव्यम् संभव इति मंत
व्यम्। उपलक्षणतयेति। तत्तत्पदजन्यशाब्दबोधविषयत्वेन भगवदिच्छाया मविषयत्वे सति तत्पदशक्यतावच्छेदकत्वानुगमकत्वमुपलक्षणतयात
त्पदशक्यतावच्छेदकत्वं। वस्तुतस्तु शाब्दबोधविषयतावच्छेदको यो धर्मोऽस्ति तदवच्छिन्नं तत्पदजन्यबोधविषयो भवत्वित्याकारक भगवदिच्छायां
बोधविषयतावच्छेदकत्वस्य तत्पदजन्यबोधविषयत्वेनापि विषयत्वस्योपलक्षणविधया शक्यतावच्छेदकतावच्छेदकत्वं यद्यपि बोधाऽविषयतारूपं

दि० रा० विषयभेदेन भिन्नमेवेति तथापि बोधविषयतावच्छेदकता त्वरूपानुगतैक धर्मावच्छिन्नत्वादेकत्वव्यपदेशः एकमेवाविषयस्थानेविषयत्वंनिवेश्यविशेषणवि श०

१० धयाशक्यतावच्छेदकतावच्छेदकत्वंनिर्वाच्यम्॥ तत्त्वलोमलोमूलत्वादेरेवमितिविभावनीयम्। प्रत्यक्षबुधिविषयइति। तादृशबुधिविषयतावच्छेदकताव

च्छिन्नइत्यर्थः बुधेरेवअयमित्यादि। पदाद्घटादिबोधनिर्वाहः। अयंघटइत्यादौ एतद्देशतत्कालवृत्तित्वादिकमेतत्प्रत्यक्षविषयतावच्छेदकमतोभेदान्व।

यानुपपत्तिः। अतएवेति। यतः प्रत्यक्षविषयेइदमेतदोः परोक्षबुधिविषये अदसः शक्तिः स्वतएवेत्यर्थः तेषांएतद्दसांभिन्नार्थकत्वमिति। इदमेतदोरे

कार्थः तदन्यत् अदसोर्थो योर्थोस्तदन्यस्तइदमेदोतेर्भिन्नार्थकमित्यर्थः एवमिति। भिन्नार्थकत्वमित्यर्थः एतदोरपीति। यतः प्रत्यक्षविषयतार्थक

त्वंतदस्तत्सान्यतोबुधिविषयतार्थकत्वमितिभावः। केषांचिन्मतमाह। इदमइति। प्रत्यक्षगतंप्रत्यक्षविषयीभूतमित्यर्थः शक्यमिति शेषः एवमुत्तरत्रा

पि। समीपतरवृत्तिचेति। चकारेणप्रत्यक्षस्यरूपमित्यस्यस्वरूपमित्यर्थः। परोक्षेति। सप्तम्यावाचकत्वमर्थः। तथचादसः परोक्षवाचकत्वाच्च किंजाअ

दः सतीयादित्यर्थः पर्यवसितः। जिज्ञासाविषयत्वविशिष्ट इति। ज्ञातुमिच्छाविषयः किंशब्दार्थइत्यर्थः किं रथिकुरेवकिं शब्देन प्रतीयते। १०

तथाचकोघटइत्यादौ घटोमदीयजिज्ञासाविषयइति शाब्दबोधइतिभावः व्यापकत्वइति। उद्देश्यतावच्छेदक इति निरूपितेविधेयतावच्छेदकानि

घ इति शेषः। संबंधत्वादित्यादौ घटनिष्ठाभावप्रतियोगितानवच्छेदकरूपत्ववत्त्वमेव स्वरूपे घटत्वव्यापकत्वमिति बोध्यम्॥ त्वंपदस्येत्येव पाठः। अन्यथा वो येही
त्यादौ शक्यकथनापत्तेः। सत्यमित्यस्य स्वमते पदत्वाच्चेति ध्येयम्। संबोध्यचैत्रत्वादिकं संबोध्यत्वसमानाधिकरणं चैत्रत्वादिकमित्यर्थः। कर्मधार
योत्तरभावप्रत्ययस्य एकपदार्थसमानाधिकरणापरपदार्थतावच्छेदकबोधकत्वात् तत्कालीनसंबोध्यत्वान्तत्कालोच्चरितसंबोधनबुद्धिमांश्चैत्रादिप
दार्थवहितान्तरवाक्यजन्यशाब्दबोधाश्रयत्वेन वक्तुरिच्छाविषयत्वं चैत्रत्वबोधजनतापि इत्यादौ चैत्रादिपदात्प्रथमयाचैत्रादिविशेषणत्वेन एतादृशमेव सं
बोध्यत्वं प्रतिपाद्यते तस्य च तत्समानाधिकरणत्वाद्दुक्षितं चैत्रत्वादिकमेव शक्यतावच्छेदकमिति भावः। एवमस्मत्पदस्येति। प्रागुक्तेन शक्यतावच्छेदकमित्य
नेनान्वेति। स्वतंत्रेति स्वतंत्रोच्चारणकर्तृत्वसमानाधिकरणं चैत्रत्वादिकमित्यर्थः। उच्चारणैस्तादृशार्थवाचकत्वेनाभिमतस्य अस्मच्छब्दस्यैवेति ध्येयम्।
उच्चारणे स्वतंत्रत्वं च अन्योच्चारणानुवाचकत्वमिति यावत्। नकर्वेबौध इति पद्यस्था अस्मच्छब्दस्य उच्चारणकर्तृत्वेपि कैवर्वाचनीयोच्चारणानुवाचकत्वात्तदु
च्चरितास्मच्छब्दात्मकवेबौध इति भावः। एवं युष्मच्छब्दशक्यतावच्छेदकघटकतत्तत्कालोच्चरितेत्यत्रापि उच्चारणमपि स्वतंत्रमेव ग्राह्यं तेन गत्यादौ संबो
धनप्रधानानुपदे नममायात्यइहतेतत्रैवेति वाक्यजन्यबोधाश्रयत्वेच्छाविषयत्वेपि सुखस्यन मे धसौ क युष्मत्पदात्तु शाब्दबोध इति मंतव्यम्। छ।

दि० रा० पदंविभज्यतइति। यद्यपिशक्तंपदमितिनपदविभागरूपंपदलक्षणमेव तथाचविभज्यतेशक्तमित्यनुपपन्नमेव तथापिशाब्दस्याद्यर्थकतयापदवि श०
११ भागस्यपदसामान्यलक्षणाभिधानांतरत्वनियमेनचनानुपपत्तिरितिध्येयम्॥ नन्वेवमपिकेवलयौगिकंपाचकादिपदमेव। तच्चनकिंचिद्धर्मेशक्तं
तस्यवाक्यत्वादिति। यौगिकस्यसामान्यलक्षणानाक्रांततया तद्विभागोऽनुपपन्नएवेतिवाच्यं। पचधातूत्तरकप्रत्ययस्यैवपाचकपदरूपतयातस्य
कर्तुरावश्यकतयापदत्वेनतद्विभागेबाधकाभावादितिभावः। एकस्यैवपदस्यएकस्मिन्नर्थेयौगिकत्वमन्यस्मिन्नर्थेरूढत्वंनसंभवतिउच्चारणभेदे
नतद्भेदादितिसकृदुच्चरितन्यायाच्चेत्याशयेनक्वचिदित्यस्यकिंचिदित्यर्थकतामादायक्वचिदितीति। ननुमूलेमंडपादिशब्दानांरूढमध्येपरिगणन
मनुपपन्नंमंडंपिबतिरक्षतिइतिवामंडपइतिव्युत्पत्यातेषांमंडपानकर्तृत्वार्थस्यसंभवेनयौगिकरूढमध्यएवस्यादित्याह। मंडपादीत्यत्रेत्यवतारयति।
तथाचपाचकमंडपपदमेवनतुमंडपपदंतच्चनक्वाप्यर्थेयौगिकमितिनतस्यरूढमध्येपरिगणनानुपपत्तिरितिभावइतिव्याचक्रुः तत्र। तस्यचनितरां
यौगिकरूढस्यापियौगिकत्वरूढत्वयोर्यथार्थविशेषसंबंधेनमंडपपदस्यगृहविशेषरूढतयारूढमध्येपरिगणनसंभवात् नएवमूलेयत्रावयवार्थाए ११
वबुध्यतेतद्यौगिकमित्येवलक्षणमुक्तम्। तत्रावयवनिरपेक्षयासमुदायशक्त्याबुध्यंतेतत्तद्रूपमित्येवरूढलक्षणमुक्तातत्रयौगिकलक्षणेयोगरूढेयौ

गिकत्ववारणायएवकारः नचैवमपियौगिकरूढस्योद्भिदादिपदस्योद्भेदनकर्त्राद्यर्थेयौगिकत्वंस्यादितिवाच्यम् इष्टापत्तेः। रूढलक्षणेनेति। योगरूढतावा
रणायैवानपेक्षणत्वानंतरंयौगिकरूढस्योद्भिच्छब्दस्यापियागविशेषरूपार्थेरूढत्वमिष्टमेवाग्राह्यतइत्यस्यार्थेबुध्यतइत्यर्थः। एवंचमंडपपदस्यगृ
हरूपार्थेरूढत्वसंभवेननरूढमध्येतत्परिगणनानुपपत्तिरितिमंतव्यम्। यत्रेत्यस्ययादृशानुपूर्व्यनवच्छिन्नेत्यर्थकतया। यौगिकरूढस्थलेएकानु
पूर्व्यवच्छिन्नस्यैवस्थलविशेषेअवयवार्थमात्रस्यक्वचित्समुदायार्थमात्रस्यबोधकत्वेननतत्ररूढत्वानुपपत्तिरितिवाच्यम्॥ प्रयासगौरवात्यौगिक
रूढस्ययौगिकत्वेरूढत्वेचइष्टापत्तौक्षतिविरहाद्यौगिकरूढभिन्नयोरपिकेवलयौगिककेवलरूढयोरपिसत्वेनविभागव्याख्यानाभावात्।
क्वचित्पाचकादिपदस्यसंकेतित्वसंभवात्तेषामपियौगिकत्वानुपपत्तिः। रूढलक्षणेअवयवशक्तिरहितस्येत्युपेक्ष्यअवयवशक्तिनिरपेक्षस्येत्ये
तावत्पर्यंतानुसरणेवैयर्थ्यापाताच्चेतिध्येयम्। वस्तुतोदृक्षणात्यामरकोशादौमंडपास्तुजलगृहाइतिपाठदर्शनात्। गौडास्तुजायाशब्दस्थानेमं
डपस्थानेमंडपेत्येवप्रयुज्यतइतिगौः। इयंग्रंथपरतयामुक्तावल्यांसहप्रसंकेतमंडपशब्दमुपलक्ष्यग्रंथकृतातदभिहितमितिबोध्यम्। मूलेऽवय
वशक्तिविषयइति। अवयवशक्तिज्ञानजन्यशाब्दबोधविषयइत्यर्थः। समुदायशक्तिरप्यस्ती त्यस्यसमुदायशक्तिस्मारितार्थविषयकत्वमप्यस्ती।

दि॰ रा॰ त्यर्थः यथाश्रुते पाचकादिपदस्यापि योगरूढत्वापत्तेः। पाककर्तरि प्रयुक्तस्य एकादशेहनि पितृसंकेतपाचकपदस्यावयवशक्तिसत्वात्। अस्माकं श॰ टु॰
१२ पंकजादिपदाद्धि तएव पद्मत्वावच्छिन्नपंकजनिकर्त्रोद्यभावेन भेदेनान्वयबोधे अनादितात्पर्योपगमात्। पाककर्त्रोद्यभिन्नो पाचक इति शाब्दबो
धस्यानुदयेन तस्य योगरूढत्वापत्तिविरहादिति ध्येयम्। मूलेस्यादिति। कुमुदेति। अवयवार्थमात्रस्य बाधितत्वेन तदर्थविषयकबोधभयात्तत्रा
पि पंकजपदप्रयोगसंभवादिति भावः। लेशस्य समुदायशक्तिस्मारितार्थविषयकेत्यर्थः। यौगिकार्थज्ञाने अवयवार्थज्ञाने त्यर्थे नचेत्याद्यापादनतत ए
वमाशंकामूलोक्तं मु केवलपदानुपादाने एतस्यानुदयाद् इति सुधीभिर्विभावनीयम्। प्रतिबंधकत्वमिति। प्रतिबंधकत्वमित्यस्य विरोध्यविषयकज्ञान
स्येत्यादिः। तेनानुमितौपरामर्शाविरोधिनापि बाधनिश्चयस्यानुमितिप्रतिबंधकत्वेपि न नियमानुपपत्तिरिति ध्येयम्। सांनिध्यादिति। ननु मूले पद्मत्वा
वच्छिन्नस्य संनिहितोपस्थितिविषयत्वेन तत्र पंकजनिकर्तुरवयवार्थस्यान्वय एव भवति। न तत्र प्रतिबध्यप्रतिबंधकभावः प्रामाणिक इत्युक्तं मूले तन्न संग
च्छते कुमुदतात्पर्येणापि योगव्युत्पत्त्या पंकजपदप्रयोगस्येष्टत्वेन तत्रापि पंकजनिकर्त्रभिन्नं पद्ममिति बाधापत्तेः नच पद्मत्वावच्छिन्नस्योपस्थितिरि १२
ति विग्रहादेव नियमापत्तिरिति वाच्यम्। पंकजत्वस्य पद्मस्मारकशक्तिसत्वात्ततः पद्मस्मरणस्यावश्यकत्वादित्याशंकानिराबाधासांनिध्यादित्यनेन

तत्रपंकजपदस्यपद्मरूपार्थतात्पर्यसत्वादित्यकमित्याह व्यक्तिवचनानामिति। घटपदादिव्यक्तिवाचकानामित्यर्थः जातिपरशब्दव्यावृत्यर्थं विशेषोपादा
नसंनिहितपरत्वंम्। अव्यवहितोपस्थितशाब्दबोध व्यक्ति तात्पर्यकत्वमित्यर्थः। अतएवघटमानयेत्युक्ते संनिधानेघटसत्वेनदूरदेशस्थघटान
यनेलोकेनप्रवर्त्ततइतिभावः। तथाचोपस्थितपद्मत्वावच्छिन्नपरत्वेपंकजपदस्यतात्पर्यविषयीकृतस्यपंकजनिकर्तुः पद्मेऽभेदान्वयबोधयो
ग्यतासत्वात्तत्रभवतितादृशान्वयबोधः। यत्रतुकुमुदतात्पर्येणैवपंकजमस्तीतिप्रयुज्यतेतत्रपद्मेवृत्तित्वस्यबाधितत्वेनकुमुदएवतात्पर्यनिश्च
याभावात्पर्यविषयस्यपंकजनिकर्तुः कुमुदस्यपद्मेऽभेदसत्वाद्योग्यताविरहेणतत्रनतादृशान्वयबोधइतिभावः सर्वत्रदेशरूढ्यर्थस्यपद्मस्यबा
धनिश्चयेपिपद्मकुमुदातिरिक्तपंकजनिकर्तृपदार्थतात्पर्येणपंकजनिकर्तृत्वमात्रतात्पर्येणवाकुमुदस्यैवबोधेतात्पर्येतत्रलक्षणयाकुमुदबो
धाभावात्तद्ग्रंथासंगतिरित्यतः पूरयतिकुमुदत्वेनेति। तेनेतिबाधः प्रतिसंधीयतइत्यस्यसामग्रीविरहोपलक्षणत्वेनेत्यर्थः सामग्र्यंतरेति। त्रा
मादिकोयंपाठः। कारणांतरविरहइत्येववक्तुमुचितत्वात्सामग्रीपदंसामग्रीघटककारणपरमात्रंद्रष्टव्यम्। तच्चकारणंरूढ्यर्थस्मरणादिकमेवेति
ध्येयम्। ननुयोगरूढस्थलेपंकजनिकर्त्रभिन्नपद्ममितिबोधाभ्युपगमेवाचरितंसकृदुच्चरितइतिन्यायविरोधादतएवयौगिकरूढस्थलेएकार्थ

दि॰ रा॰ बोध इतिचेन्न। एकपदोपस्थाप्ययोगरूढ्यर्थयोर्भेदेनान्वयबोधे आकांक्षावैचित्र्यस्यैव योगरूढस्थले तादृशव्युत्पत्तिसंकोचस्यावश्यकत्वादिति भावः रा॰ ७
मूले यत्रात्विति। यादृशैकानुपूर्व्यवच्छिन्नइत्यर्थः। तेनोच्चारणभेदेनउद्भिद्पदस्यभेदेपि न क्षतिः उच्चरितइतिशेषः पूरणीयः स्वातंत्र्येणेति। अर्थांतरमवि
१२ षयीकृत्येत्यर्थः इदंचयोगरूढव्यावृत्त्यर्थमुक्तम्। मूले यागविशेषोपीति। उद्भिदायजेतपशुकामः इत्यादावित्यर्थः। तेनोच्चारणभेदेन उद्भिदस्तरुगुल्मा
द्याइत्यादौतरुगुल्माद्यारूढ्यर्थभेदेनकर्तरीइतिबोधस्ततइति भावः। जहत्स्वार्थेति। जहत्स्वार्थं येयमिति व्युत्पत्त्याशब्दार्थाविषयकशाब्दबोधजनिका
गंगापदादेस्तीरादौलक्षणा। अत्रस्वपदंलक्ष्यकत्वेन अभिमतपरं। अर्थपरमेवमयेयपि बोध्यम्। एवमेवनजहत्स्वार्थं ययेतिव्युत्पत्त्या। अजहत्स्वार्था। छत्र्यादि
पदस्यछत्रिधारितस्यएकसमुदायत्वेनछत्रितदन्यबोधजनिका छत्रिधारितैकसमुदायत्वावच्छिन्नेलक्षणेत्यर्थः। आद्यामिति। जहत्स्वार्थामित्यर्थः। वक्ष्यमा
णास्वरसादिति। अन्वयानुपपत्तेर्लक्षणाबीजत्वे यष्टीः प्रवेशयेत्यादौ यष्टिपदस्ययष्टिधरलक्षणानुपपत्तिरूपास्वरसादित्यर्थः। समुदायत्वं तद्विषयकबुधि
विषयरूपं। तद्वाहित्वेन तद्वत्वेनेत्यर्थः। तृतीयार्थावच्छिन्नत्वं तस्य च लक्षणापदार्थे लक्षणतायामन्वयोबोध्यः मूले इयमेवचेत्ति। काकपदस्यदध्युपघातकेछत्रिप १२
दस्यछत्रिधारितसमुदायेलक्षणेवचेत्यर्थः। क्वचिन्मूले एकसार्थवाहित्वे लक्षणेतिपाठो दृश्यते। तदभिप्रायेणव्याचष्टे एकसार्थवाहित्वविशिष्टेति। ननु छत्रीत्य

स्यमूलोक्तलक्षणानसंगच्छते। छत्रमस्यास्तीत्यर्थे छत्रिपदोत्तरं तद्धितेन कृतोबाधप्रत्ययेनैव छत्रीत्यस्यनिष्पन्नतया प्रकृतिप्रत्ययसमुदायरूपत्वेनत
स्यवाक्यत्वाद्वाक्येचशक्तिविरहेणलक्षणायाअप्यसंभवादित्यतआह। छत्रीत्यादि वाक्यलक्षणावादिमतेनेति वैयाकरणैः राजपुरुषइत्यादिसमासप
दस्यराजस्वत्ववत्पुरुषेपाचकछत्र्यादिपदस्यपाककर्तृछत्रसंबंध्यादौशक्तेरंगीकारादितिभावः। ननुनेदंमतंविचारसहं समासेराजपदस्य
राजसंबंधिनिलक्षणयाराजपदस्यपुरुषेशक्तौचराजसंबंध्यभिन्नःपुरुषइतिबोधोपपत्तौसमासेस्वतंत्रकल्पनेशक्त्यादौवछत्रार्थकछ
त्रपदस्यसंबंध्ययुप्रत्ययाभ्यामेवछत्रसंबंधीतिबोधोपपत्तौछत्रीत्यस्यछत्रसंबंधिनिशक्तिकल्पनेबीजाभावात् अन्यथानिरर्थकनानाश
क्तिकल्पनागौरवप्रसंगाच्चसमासादौशक्तिस्वीकारमावश्यकः। अन्यथार्थस्यराजमातंगइत्यादिप्रयोगापत्तेः तत्रराजमातंगपदार्थतावच्छे
दकराजस्यभेदेनवधपदस्यान्वयोनसंभवतिपदार्थः पदार्थेनान्वेति। नतुपदार्थतावच्छेदकेनेतिनियमात् राजपदस्यैवराजार्थकत्वेतुतत्रघ्यर्थ
पदस्यभेदेनान्वयेनकिंचिद्बाधकमितितादृशप्रयोगोदुर्वारइतिवाच्यम्। राजपदस्यराजसंबंधिनिलक्षणत्वेतयाराजः पदार्थतावच्छेदकत्वसंभव
छक्यतावच्छेदकस्यैवलक्ष्यतावच्छेदकस्यापिपदार्थतावच्छेदकत्वात्। छत्रीत्यादौचपदार्थांतरस्यान्वयबोधात्। वस्तुयुक्तस्यसविशेषणयुक्तस्य

दि॰ रा॰ निवृत्तिरिति समासकृत्तद्धितादिरूपवृत्त्यैकदेशार्थपदार्थांतरेणान्वयस्य व्युत्पत्त्यातादृशेत्यस्वरसादाहनैयायिकमतेत्विति। वस्तुतः वृत्त्यैकदेशा श॰ ङ॰
र्थव्युदासशासनादौ चैत्रस्यकरणकत्वादिरूपपदार्थांतरस्य भेदसंबंधेन चैत्रस्य दासभार्येत्यादौ शरैः शादितिपुत्रहत्यादौ अन्वयभेदादर्शनाद्भेद
१४ संबंधेन तत्रपदार्थांतरान्वयोऽव्युत्पंन इत्यवश्यमंगीकरणीयंम्। तथा चाभेदान्वयत्रयोऽजकसमानविभक्तिकपदोपस्थाप्यत्वाभावादभेदान्वयबो
धवारणसंभवे चैत्रस्येत्यादिव्युत्पत्त्यंगीकारेऽपि न क्षतिः। न चैवं तस्यापि तेत्यादौ पितृपदार्थतावच्छेदकघटकजनकत्वेपि निरूपितत्वस्य षष्ठ्यर्थ
स्यान्वयदर्शनात्पदार्थतावच्छेदकेपि भेदेनैव पदार्थांतरस्यान्वयो व्युत्पंन इत्यवश्यमंगीकरणीयंम्। तथा विधान्वयबोधस्य च समानविभक्तिकप
दोपस्थाप्यत्वाभावादेववारणसंभवे पदार्थः पदार्थेनान्वेतीत्यादिव्युत्पत्तिकल्पनमपि नावश्यकमिति वाच्यंम्। तथा सति गवि पश्चगौरित्यादितः
गौवृत्ति लोमलांगूलवान् गौरित्यादौ बोधापत्तिः चैत्रस्य पितेत्यादौ तु ससंबंधिकपदशक्यतावच्छेदकेपि पदार्थांतरान्वयस्य व्युत्पंन्नतया नान्व
यबोधान्वयानुपपत्तिः ससंबंधिकं च पदं संबंध्याकांक्षोत्थापकमवधेयं। एकसार्थवाहिलवइति। एकसमुदायएवेत्यर्थः नैराकांक्ष्येणेति। उद्देश्यताव १४
च्छेदकविधेययोरैक्ये भेदान्वयस्याव्युत्पंन्नतया गमनकर्तृत्वविशिष्टगमनस्यान्वयतया। न्वयबोधे आकांक्षाविरहादिति भावः छत्री छत्रपदस्य छत्र

त्रिघटितसमुदायलक्ष्यतज्जन्यशाब्दबोधेछत्ररूपमुख्यार्थस्यमुख्यविशेष्यतयाभानाभावादितिध्येयम्। वाक्यलक्षणेति। एतच्चापाततएव
समाधानम् वस्तुतः स्वजन्यबोधेशक्यार्थस्यविशेषणतयाभानेपिनाजहत्स्वार्थताभंगः यादृशलक्षणतया शक्यार्थस्यकथंचिदपिनबो
धतस्याएवजहत्स्वार्थत्वादतएवगंगापदस्ययत्रगंगातीरत्वेनलक्षणासाऽजहत्स्वार्थायत्रतुतीरत्वेनलक्षणातत्रैवजहत्स्वार्था। न्याय
मतेपिछत्रीत्यादावजहत्स्वार्थलक्षणोपपादनमितिध्येयम्। तीरत्वेनेति। इदमपिपूर्वोक्तविरुद्धमेव। छत्रिघटितसमुदायलक्षणाछत्रिपद
स्यविशेषणतयाछत्रबोधकत्वेनतस्यामप्यजहत्स्वार्थत्वसंभवादितिध्येयम्। नचकेवलसमुदायत्वेनयत्रछत्रपदस्यलक्षणातत्रैवजह
त्स्वार्थत्वविरोधोनचेत्यादिनापूर्वमाशंकितइतितेनपूर्वोक्तग्रंथविरोधइतिवाच्यम्। एवमपिछत्रिघटितसमुदायत्वेनछत्रपदस्यलक्षणातत्रैवज
हत्स्वार्थत्वोपपत्तेरितिसमाधानस्यैवकार्यत्वाद्वाक्यलक्षणावादिमताभिप्रायेण जहत्स्वार्थत्वोपपादनानौचित्यादतएवानुपदमेवग्रंथकृतैवयत्र
तीरत्वेनगंगापदस्यलक्षणा। तत्रैवगंगापदस्यजहत्स्वार्थलक्षणायाः सर्वसंमतत्वादितिवक्ष्यते। तत्रहिसर्वपदमहिम्नागंगातीरत्वेनलक्षणाया
मपिजहत्स्वार्थत्वस्यनकेषांचिदनुमतत्वंलक्ष्यैतेतस्यशक्यार्थस्यपदार्थांतरेणसांकर्यंयत्रान्वयबोधस्तत्रैवजहत्स्वार्थत्वमितितदभिप्रायेणैव

दि॰ रा॰ घटितद्इतिमंतव्यम्॥ अतिप्रसंगस्येति। रूत्पदजंन्योपाधिविषयस्यापिशाब्दबोधस्य नोपगमे घटादिपदाद्घटविषयक शाब्दबोध इति नियमोप शा॰ उ॰
गमेनैवघटावच्छिंन्नविशेष्यक शक्यसंबंधग्रहः तद्धर्मावच्छिंन्नविषयकमेव पदार्थस्मरणं शाब्दबोध इति नियमोपगमेनैवघटादिःविषया न पठादिवि
१५ षयक शाब्दबोधापत्तिरितिरिभावः प्रवाहसंयोगस्येति॥ तथाच शक्यसंबंधरूपलक्षणाया लक्ष्यतावच्छेदकतीरत्वेभावादित्यपि लक्ष्यतावच्छेदकेन
लक्षणंतिभावः। यद्यपि तीरत्वपि संयुक्तसमवायरूपसंबंधोस्त्येव तथापि युगपद्वृत्तिद्वयविरोधेन शक्तिद्वयेनेव लक्षणाद्वयेनापि एकपदार्थद्वये शाब्दबो
धस्यानुपगमेनैकपदात्तीररूपद्वयोर्बोधानुपपत्तिरितियंथकृतांतात्पर्यम्। गंगायांघोषमध्यास्तइत्यादिप्रयोगस्य प्रामाण्योपगमेवसतीत्येववृत्तिद्वयेनेव
युगपंन्नानार्थविषयक शाब्दबोध इत्युपगमतोक्तस्थले गंगापदादेवतीरप्रवाहयोर्बोधेपिनक्षतिरितिमंतव्यम्। मूले परत्वेत्यादि। अत्रेदमवधेयम्॥
शक्यतावच्छेदके शक्तिस्वीकारे पृथिवीपदादष्टद्रव्यातिरिक्तद्रव्यत्वेकदाचिद्गंधवत्वेनकदाचित्पृथिवीत्वेनच शाब्दबोधापत्तिः। पृथिवीपदशक्येतिवदष्टद्रव्या
तिरिक्तद्रव्यंगंधवत्वात्पृथिवीपदशक्यमित्याकारकस्य शक्तिज्ञानस्यसंभवात्तीरत्वीरंगंगातीरत्वाप्रवाहसंयोगवदितिलक्षणाग्रहणेशक्तिग्रहस्यतुल्ययोग १५
क्षेमत्वात्। तथाच लक्षणायायत्किंचिदेकधर्मावच्छिंन्नविषयक एव शाब्दबोध इति यथा नियमस्तथा।

शक्यबोधेपिनियमेनस्याच्छक्यतावच्छेदके शक्तिस्वीकारेतुपृथिवीपदात्पृथिवीत्वेनैवशाब्दबोधइतिनियमउपपद्यतेपृथिवीपदस्यपृथिवीत्वपृथिव्योरेव
शक्ततयाशक्यार्थस्यैवशाब्दबोधेभानमितिनियमेनचतदुपपद्गनसंभवाल्लक्षणयाचान्यस्यापिशाब्दबोधभानोपगमेनलक्षणयाकदाचित्तीरत्वेनकदाचि
द्गंगातीरत्वेनशाब्दबोधोभवत्येव।इदंपुनरत्रतत्वंधर्मितावच्छेदके शक्यतावच्छेदकत्वावगाहिशक्तिज्ञानत्वमेवशाब्दबोधहेतुरूपेयते।शक्यतावच्छेदकंचस
र्वत्रलक्ष्यशून्यानतिरिक्तवृत्तिधर्मःसंभवति।लक्ष्योः शाब्दस्वरूपसंबंधरूपावच्छेदकत्वेमानाभावः।तीरंप्रवाहसं।बंधवदिति।वद्गंगातीरंप्रवाहसंयोगीतिवृ
त्तिरेवासर्वानुभवसिद्धत्वात्पृथिवीपृथिवीपदशक्येति बोधस्यैवदुर्घव्यतिरिक्तद्रव्यंतथेत्यादि शक्तिज्ञानस्यसर्वसंमतत्वेनशक्तित्तीनांस्वरूपसंबंधरूपा
वच्छेदकत्वावगाहित्वस्यसिद्धाशक्तेस्तथाविधावच्छेदकत्वंप्रामाणिकमेवघटोनास्तीत्यादिप्रतीत्याघटत्वस्यैवप्रतियोगितावच्छेदकत्वं।इत्थंचशक्यतावच्छे
दके शक्तिविरहेपिपृथिवीपदशक्तिभ्रमायापृथिवीत्वप्रकारकएवशाब्दबोधः शक्तिभ्रमेतुगंधवत्वादिनापिशाब्दबोधइत्यत्रएव।प्रांतस्यगंधवत्वाव
च्छेदेपिशक्तिज्ञानसंभवादितिपरैरपरिशीलितः पंथाः कल्प्यतइतिउपस्थापइत्यर्थः अन्वयबुशत्याद्विरेफपदात्स्साक्षात्संबंधरूपानिरूढ

दि० श० लक्षणासहकृततया भ्रमरबोधनिर्वाहे शक्यस्य परंपरासंबंधरूपलक्षितलक्षणास्वीकारोऽनुचित इति भावः । नन्वेवं द्विरेफपदे लक्षितलक्ष श० मु०
१६ णैवास्तु इति सिद्धं प्रवाहस्य का गतिरित्यत आह । लक्षितेनेति । द्विरेफपदलक्षितेन भ्रमरपदेन लक्षणं शाब्दबोधरूपज्ञाने । आकारांतप्रयोगस्तु
चासनैव क्रियते श्रवणानंतरं स्यादिति भावः । प्रत्ययानामिति । यस्मात्प्रत्ययो विधीयते सा प्रकृतिस्तदर्थेन प्रत्ययतत्तज्जन्योपस्थितिविषयः । तद
न्वितस्वार्थबोधकत्वादित्यर्थः । प्रत्ययाश्च विभक्तिकृत्तद्धितार्थाख्यात । तथा च द्विरेफपदेन भ्रमरपदमेव न तु तदर्थ इति कथं तत्र विभक्त्यर्थकर्मत्वान्वय
इत्युपपत्तिः । स्यादतः शक्यस्य रेफद्वयस्य घटितपदवाच्यत्वरूपपरंपरासंबंधादेकया लक्षितलक्षणया द्विरेफपदाद्भ्रमरोपस्थितिः । इत्यर्थे तादृश
स्वीकारावश्यकत्वादिति भावः । मूलेनानुभावुकमिति शाब्दानुभवजनकं नेत्यर्थः । तथा च लाक्षणिके पदे स्मारिका शक्तिरेव नानुभाविकेति भावः । ननु त
र्हि लाक्षणिकार्थस्य कथं शाब्दबोधे भानमित्याकांक्षायां लाक्षणिकपदसमभिव्याहृतशक्तपदांतरमेव लाक्षणिकार्थान्वितस्वार्थशाब्दबोधं प्रति का
रणमिति शक्तिपदांतर एव शाब्दबोधे लाक्षणिकपदस्य भिन्नार्थकत्वे सकलशक्तपदानामपि लाक्षणिकशाब्दबोधजनकत्वं प्रतीयते । तच्चायुक्तं गंगायां १६
घोष इत्यत्र घोषस्यैव तीरशाब्दबोधजनकतायाः सर्वानुभवसिद्धत्वादतो व्याचष्टे पदार्थांतरमिति । समभिव्याहृतेति । लाक्षणिकपदसमभिव्याहृतेत्यर्थः

तथाचलाक्षणिकपदसमभिव्याहृतशक्तिपदस्मारितलक्ष्यार्थविषयकशाब्दबोधजनकमितिभावः। इतरपदार्थइति। इतरपदजन्यस्मृति
विषयार्थइत्यर्थः। तत्रपरपदेतृतीयार्थस्यस्वविषयकज्ञानसहितत्वेवैशिष्ट्यपदस्यवान्वयः। कुमतिरिति। कुत्सितामतिर्यस्यसः कुमतिरिति
बोधः। उत्तरपदस्यकुत्सितज्ञानवल्लाक्षणिकतयापूर्वपदस्यतात्पर्यग्राहकतयानिरर्थकतयाकुमतौपशुत्वबाधितत्वेनपशुपदस्यापिपशु
पदेलाक्षणिकतया। कुमतिःपशुरित्यत्रकस्यापिशक्तपदस्याभावात्तत्रशाब्दबोधोपपत्तयेलाक्षणिकपदेयानुभाविकीशक्तिरवश्यमंगीकर
णीयेतिभावः। गुरुकुलमित्यादि। कुलमितिसंपातायातं। चैत्रस्यगुरुरित्यत्रापिगुरुत्ववच्चैत्रनिरूपितत्वस्यायातत्। नचगुरावेवचैत्रसंबंधःतत्रा
न्वयमितिवाच्यम्। तथासति। चैत्रपुत्रादावपितथाप्रयोगप्रसंगात्चैत्रपुत्रस्यकस्यचिद्गुरुत्वाच्चैत्रसंबंधित्वाच्चेतिबोध्यम्। ननुगुर्वादिपदस्यसं
बंधिकत्वेनतदर्थैकदेशेपदार्थान्तरान्वयसंभवेपिनदीपदस्याकैंथात्वात्कथंतदेकदेशेगंभीरपदार्थान्तरान्वयइत्यतआह। पदभेदेनेति। व्यु
त्पत्तिभेदात्। आकांक्षाभेदात्। प्रकृतइति। एतद्वाक्यस्यनदीपदइत्यर्थः। उत्तरपदएवेति। यद्यपिगंभीरायांनद्यांघोषइत्यस्यैवपूर्वमुदाहृतत्वे
नतत्रगंभीरपदोत्तरमपिसप्तमीश्रूयते। येनयेनमनुपपत्तिस्तथापिविशेषणविभक्तेःसर्वत्रनिरर्थकत्वेनतस्याःसार्थकत्वोपगमस्यानुपयुक्तत्वात्।

० रा० घोषपदेनगंभीरामित्यस्यानासंलत्वाच्छाब्दबोधानुपपत्तेश्चगंभीरायांघोषइत्यायांसर्वथानुपपत्तेश्चनतथोपगमसंभवइतिभावः।गंगापदजं शं० ङ ०
न्यबोधेपि।गंगापदशक्यार्थस्मरणरूपेत्यर्थः।वाक्यजंन्यबोधस्तुशाब्दबोधरूपेतिभावः।गंगायामित्यस्यापिगंगायांघोषइत्यत्रगंगापदएवलक्ष
१७ णासर्वानुमता।ननुगंगायामितिवाक्येपदलक्षणायाअनुपपत्तेरभावात्।गंगायामितिवाक्यजंन्यस्यापिगंगातीरवृत्तिशाब्दबोधस्यगंगाविषयकत्वात्सं
बंधस्यतीरेसत्वात्तादृशवाक्यस्यापितीरेलाक्षणिकत्वादितिभावः।इदंचगंगातीरत्वेनशक्यसंबंधप्रवाहमभिप्रेत्योक्तंतीरत्वेनतुतथात्वेनप्रवाहेसेनवाक्य स्य ४
जंन्यबोधविषयत्वमित्यवधेयम्॥तत्वेनेति।यादृशानुपूर्व्यवच्छिन्नजनकतानिरूपितजंन्यताशालिबोधविषयसंबंधएवतादृशानुपूर्व्यवच्छिन्नलक्षणा
वाच्येतिभावः।एवंगंगायामित्यानुपूर्वीनशाब्दबोधजनकतावच्छेदिकेतिनवाक्यलक्षणापत्तिः।यद्यपिगंगातीरवृत्तिरित्याकारकशाब्दबोधंप्रत्याकांक्षा
ज्ञानविधयागंगापदोत्तरसप्तमीरूपसमभिव्याहारज्ञानस्यकारणत्वमावश्यकम्।अंन्यथासप्तम्युत्तरगंगापदज्ञानेनतादृशशाब्दबोधापत्तेः।तथापितादृशा
नुपूर्व्यवच्छिन्नविषयकज्ञानमेवशाब्दबोधजनकंनतुतादृशानुपूर्व्यवच्छिन्नमेवेतिनेदानींवाक्यलाक्षणिकत्वापत्तिरितिभावः।नचैवंपदज्ञानमेवशाब्दबोध १७
कारणंनतुपदमितिपदानुपूर्व्यवच्छिन्नजनकतानिरूपितजंन्यताशालिबोधाप्रसिध्यापदस्यापिलाक्षणिकीत्वानुपपत्तिरितिवाच्यम्।ज्ञायमानपदस्य

न्निष्ठत्वंनिवेश्यः।मतोनदोषः पूर्वकल्पपरित्यागेबीजमाहतेनेति नदोषइतिसामान्यादौहेतुतावच्छेदकसंबंधेनवृत्तेरप्रसिद्धावपितत्संबंधावच्छिन्ना
याद्रव्यत्वाधिकरणताया द्रव्येप्रसिद्धाया अभावस्यसाध्यानधिकरणत्वव्यापकत्वादित्यर्थः साध्यवैयधिकरण्येतस्यनिरुक्तार्थकत्वेपौनरुक्त्यमत
स्तद्व्याचष्टे साध्यवैयधिकरण्यमितिननुमूलेतदुभयमपिसाध्यानधिकरणानधिकरणत्वमित्यनेनोक्तलक्षणद्वयार्थानुवादोऽसंगतः असामा
नाधिकरण्यवैयधिकरण्ययोरधिकरणताद्वयघटितत्वेनतादृशलक्षणयोरधिकरणतात्रयघटितत्वादनुवादेचाधिकरणताद्वयमात्रस्यनिवेशादित्य
तस्तादृशमूलंसंगमयतिचरमाधिकरणत्वांशस्येति अनतिप्रयोजनकत्वेयेति अनधिकरणत्वस्याधिकरणत्वाभावरूपतयातद्घटकाधिकरणत्वांशंप
रित्यज्यसाध्यासामानाधिकरण्याभावसाध्यवैयधिकरण्याभावनिवेशेनैवोपपत्तेरितिभावः असामानाधिकरण्याऽधिकरणत्वाभावस्यारवं
डस्यासामानाधिकरण्याद्यभावाघटिततयाऽनैवयर्थ्यमित्यनतिप्रयोजनकत्वेयुक्तं तदपहाय चरमाधिकरणत्वांशंपरित्यज्यद्वयंसाध्यसा
मानाधिकरण्याभावसाध्यवैयधिकरण्याभावरूपनिष्कृष्टलक्षणार्थद्वयंसाध्यानधिकरणानधिकरणत्वमित्यनेनसत्तावान्द्रव्यत्वादित्यादा
वव्याप्तिवारणायविवक्षितस्यप्रथमलक्षण [illegible]ष्कृष्टार्थस्यकथंचिदपिप्रतिपादनासंभवात् तदनुवादनतानुपपत्तिरितियथाश्रुतार्थानुवाद

ज्ञानाश्रय एवोक्तः यः सर्वज्ञः सर्वविद्याद्यनुरोधात्। आनंदमित्यस्याप्यानंदवदित्यर्थः। अर्श आदित्वान्मत्वर्थीयोऽच्प्रत्ययः।
अन्यथा पुंल्लिंगत्वापत्तेः। आनंदोपि दुःखाभावे उपचर्यते। भाराद्यपगमे सुखी संवृत्तोऽहमितिवत्। अस्तु वा तस्मिंन्नानंदो
न त्वसावानंदः। असुखमिति श्रुतेः। न विद्यते सुखं यस्येति कुतो नार्थ इति चेन्न क्लिष्टकल्पनापत्तेः। प्रकरणविरोधादा
नंदमित्यत्र मत्वर्थीयाच्प्रत्ययविरोधाच्चेति। संक्षेपः। एतेन प्रकृतिः कर्त्री पुरुषस्तु पुष्करपलाशवन्निर्लेपः किंतु
चेतः

श्रीगणेशशारदागुरुभ्योनमः॥ श्रीशारदाजयतिसत्यंम्॥ शुभमस्तु॥ उपजीव्योपजीवकभावेति॥ अतिदेशवाक्यजन्यशाब्दबोधस्यैवो
पमानत्वमितिप्राचीनमतेउपमानप्रमाणस्यातिदेशवाक्यरूपशब्दप्रमाणजन्यत्वेनशब्दस्यार्थज्ञानजन्यत्वमितिमतेविशिष्टार्थवाक्यार्थज्ञानरूपप्रयोग
मूलभूतज्ञानजन्यत्वेनशब्दस्यैवतन्मतेप्रमाणत्वेनस्वरूपतउपजीव्योपजीवकभावः॥ शक्तिज्ञानात्मकोपमितिजन्यत्वेनशाब्दबोधस्या
फलयोरप्युपजीव्योपजीवकभावः॥ सादृश्यज्ञानमेवोपमानमितिनवीनमतेफलनिष्ठयोरेवउपजीव्योपजीवकभावयोः स्वाश्रयकरणात्म
कपरंपरासंबंधेनप्रमाणनिष्ठयोरेवउपजीव्योपजीवकभावयोः संगतित्वंबोध्यमितिकेचिदाहुः॥ तन्नश्रद्धेयं। सादृश्यज्ञानात्मकोउपमा
नजन्यत्वस्यसाक्षात्संबंधेनैवोपमितौसत्वादुपमितेरपिपदज्ञानरूपत्वेनशब्दप्रमाणरूपत्वात्स्वरूपतएवसंगतित्वसंभवात्॥ यद्यपिशा
ब्दबोधस्यउपमानत्वनयेउपमानत्वेपिशाब्दोपजीवकत्वमस्तीतिशब्दनिरूपणानंतरमेवोपमानंकुतोननिरूपितमितिवक्तुं
शक्यतेतथापिसंगतेरनंतराभिधानाद्याथत्वेनदोषः। प्रपंचितमनुमानखंडएव। एवकारार्थकस्येति। एवकारार्थोयस्ये

दि०रा० तिमध्यमपदसमासलोपेन एवकारार्थबोधकस्येत्यर्थः। हस्तचेष्टादेरिति। तथाच मौनिस्थले विजातीयहस्तचेष्टास्थले च शब्दो शब्द
१ शब्दोच्चारणभावेन ज्ञायमानपदाभावाच्छाबोधो न स्यात्॥ पदज्ञानस्य कारणत्वमिति नवीनमते तु लिप्या हस्तचेष्टया च सं
केतितपदज्ञानाद्भवति शाब्दबोध इति भावः। पदार्थज्ञानमात्रस्येति। यद्यपि प्रत्यक्षादिना घटादिज्ञाने पदज्ञानजन्यत्वा
भावेन पदज्ञानव्यापारत्वमसंभवदुक्तिकमेव तथापि घटपदबोध्योयं घट इत्यस्या उपनयसंनिकर्षविधया पदज्ञानजंत्वे न्यं
न व्यापारत्वसंभवो बोध्यः॥ अयं घट इति शाब्दबोधस्य तु पदज्ञानजन्यत्वं सुलभमेवेति भावः॥ घटकत्वमिति। पदजन्यपदा
र्थोपस्थिति घटकं पदजन्यत्वं वृत्तिरूपसंबंधसहकारेण मूलार्थो बोध्य इति भावः। ननु वृत्तिरूपसंबंधज्ञानस्य सहका
रित्वं कुत इत्यत्वेदित्थं। एकसंबंधिज्ञानमपरसंबंधिस्मारकं। पदज्ञानार्थोपस्थितिरीत्या पदपदार्थयोर्वृत्तिरूपसंबंधिज्ञाने

सत्येव पदज्ञानात्पदार्थस्मरणं जायते। न तु पदज्ञानमात्रे हस्तिहास्तिपकयोः संबंधाज्ञाने हास्तिपकदर्शनेपि हस्तिनोऽस्मर
णादिति संबंधज्ञानस्य संबंधिज्ञानसहकारित्वमवसेयमिति। इत्थं च पदजंन्येत्यादिमूले पदज्ञानजंन्येत्यादिरेवार्थ इति
बोध्यं। एकसंबंधिज्ञानस्यैवापरसंबंधिस्मारकत्वादिति। तीरोपस्थितेरभावादिति। गंगापदशक्यप्रवाहसंबंधस्य तीरे गृहीत
त्वादेव गंगापदेन प्रवाहोपस्थितौ तीरोपस्थितिसंभवेन तीरे गंगापदशक्तेरकल्पनादिति भावः। अन्यतरसंबंध इत्य
त्र षष्ठीतत्पुरुषसमासभ्रमं निराकुरुते। अन्यतरात्मक इति। पदजंन्यपदार्थोपस्थितावेवेति। शक्तिज्ञानाभावेपि श
क्यसंबंधरूपलक्षणाग्रहस्याथसंभवेन पदपदार्थयोः संबंधज्ञानाभावात्पदज्ञानेन शाब्दबोधप्रयोजकीभूतस्म
रणोत्पादनासंभवात्तथा चैतदभिप्रायेणैव कारिकायां शक्तिधियः पदज्ञानसहकारित्वमुक्तमिति भावः। अतिप्र